यथा (७अ० १५क०) तृम्पन्तु होत्राः, (२५अ० १क०) अव-क्रन्देन तालु ॥

षादनन्तरऋकारे ॥ ९५ ॥

षकारादनन्तरो नकारऋकारे प्रत्यये प्रश्लत्या भवति, यथा (३३अ० ८०क०) षृषस्व॒ प नृ॑मणः ॥

शिलिसिवर्गमध्यमव्यवहितोऽपि ॥ ९६ ॥

शकारलकारसकारव्यवहितः वर्गाश्च ते मध्यमाश्च वर्ग-मध्यमाः चटतवर्गाः तैश्च व्यवहितो नकारऋषरेभ्य उत्तरः प्रश्लत्या भवति, शकारव्यवहितो यथा (१२अ० १क०) दृशानो रुक्मः, (५अ० ३२क०) सम्राडसि कृशानुः, लकारव्यवहितः यथा (२५अ० २क०) निर्ऋ॑तिर्नि॑र्जल्पेन, सकारव्यवहितः यथा (१८अ० ८४क०) अपाए रसे॑न वरु॑णः, चवर्गव्यवहितः यथा (२०अ० ४२क०) प्राचीनं॑ ज्योतिः, (३अ० ७क०) अन्त-श्चरति रोचना, टवर्गव्यवहितः यथा (११अ० ८क०) त्रैष्टु॑भेन छन्द॑सा, (११अ० ११क०) अनु॑ष्टुभेन छन्द॑सा, तवर्गव्यवहितो यथा (२८अ० ५७क०) रथिनो॑ जयन्तु, (१०) आर्द्रो॑ वृभिः, ननु शिलिसिवर्गमध्यमव्यवहितोऽपीत्यनेन सूत्रेण एतैर्वर्णैर्व्यव-हितऋषरेफेभ्य उत्तरो नकारः प्रश्लत्या भवति समानपद इत्युक्तम्, तथा "ऋषरेफेभ्यो नकारो णकारए समानपदे" "स्वरयवहकपेय" इत्यनेन एतैर्वर्णैर्व्यवहितोऽपि नकारो णका-रमापद्यते समानपदे इत्युक्तम्, एवं य एव स्वरयवहकपव्यति-रिक्ता वर्णास्त एव शिलिसिवर्गमध्यमाः अतोऽनेन सूत्रेण न प्रयोजनम् एवन्तर्हुभयया लक्षणानुकथनं शिष्यबुद्धिव्युत्पाद-नार्थम् ॥

दीर्घम् ॥ ९७ ॥

विसर्जनीय इत्युपक्रम्य इयोर्व्यञ्जनयोः सन्धौ ये लोपागमवर्णविकारास्ते प्रतिपादिताः, अधुना स्वरस्य व्यञ्जनेन सह सन्धौ यः स्वरविकारः स उच्यते ह्रस्वः स्वरो दीर्घविकारमापद्यते अधिकारसूत्रमेतत् ॥

अश्वरश्मिमतिसुमतिस्रुसुतचारयघृणिसेदिमेन्द्रियधारयचित्रभङ्गुरवयुनाश्वस्यहृदयघुष्यऋताभ्यवताध्यर्चशक्तिपुरुशचि वकारे ॥ ६८ ॥

अश्व रश्मि मति सुमति स्रु सुत चारय घृणि सेदिम इन्द्रिय धारय चित्र भङ्गुर वयुन अश्वस्य हृदय घुष्य ऋत अभि अवत अधि अर्च शक्ति पुरु शचि एते ह्रस्वस्वरा वकारे प्रत्यये दीर्घमापद्यन्ते, अश्व यथा ( १२अ० ८१क० ) अश्वावतीᳪ सोमावतीम्, रश्मि यथा (१५अ० ६३क०) रश्मीवतीभास्वतीम्, मति यथा (२२अ० १२क०) प्रदेवाय मतीविदे, सुमति यथा (२२अ० १२क०) सुष्टुतिᳪ सुमतीवृधे, स्रु यथा (२४अ० ३१क०) स्रुवाविक्क्रोमी, सुत यथा ( २०अ० ८८क०) विप्रजूतः सुतावतः, चारय यथा (२३अ० २१क०) सुमञ्जिश्चारया वपन्, घृणि यथा (२४अ० ३८क०) उष्ट्रो घृणीवान्। सेदिम यथा (२५अ० १५क०) देवानाᳪ सख्यमुपसेदिमा वयम्। इन्द्रिय यथा (६अ० २७क०) इन्द्रियावान्मदिन्तमः। धारय यथा (६अ० ८क०) हर्हसते धारया वसूनि, चित्र यथा (३अ० १८क०) चित्रावसो स्वस्ति ते पारमशीय, भङ्गुर यथा (११अ० २६क०) इन्तारभङ्गुरावताम्। वयुन यथा (५अ० १३क०) विहोत्रा दधे वयुनाविदेक। अश्वस्य यथा (२५अ० ४२क०) एकस्त्वष्टुरश्वस्या विशस्ता, हृदय यथा (८अ० २३क०) उतापवक्ता हृदयाविधश्चित्, घुष्य यथा

(२५अ० ४१क) पर्वत्यवरन्तुयुथा विप्रस्त, ऋत यथा (१२अ० १११क०) ऋतावानमृत्वियम्, अभि यथा (१४अ० २३क०) अभीवृत्तोऽसंविट्ठं० भो वर्चो ह्यविएश्च:), भवत यथा (१२अ० ८८क०) इदम् प्रावता वर्च+, अधि यथा (२५अ० ३८क०) अधीवासँया हिरंख्यान्यस्मै, अर्च यथा (३३अ० २३क०) अर्चा विश्वानराय विश्वा भुवे, शक्ति यथा (२८अ० ४६क०) कृच्छ्रे श्रितः शक्तीवन्तो गभीराः), पुरु यथा (३३अ० ८१क०) इमाऽउ त्वा पुरूवसो। शचि यथा शचीवसे ॥

## नाश्ववद्धिरण्यात् ॥ ९९ ॥

अश्ववदित्येतत्पदत्र दीर्घमापद्यते हिरण्यशब्दाद्यदि परं भवति, यथा (८अ० ६३क०) आपवश्व हिरण्यवदश्ववत् ॥

## अभि विश्वेषं वीर विश्व वत्स इव वाजयन्तेषु ॥ १०० ॥

अभीत्येतत्पदं विश्वेषम् वीर विश्व वत्स इव वाजयन्त इत्येतेषु न दीर्घमापद्यते। विश्वेषं यथा (१अ० ११क०) स्वर्भिविश्वेषम्। वीर यथा (१७अ० ३७क०) अभिवीरोऽअभिसत्वा सहोजाः), विश्व यथा (२अ० १८क०) इमां वाचमभि विश्वे गृणन्त+, वत्स यथा (२६अ० ११क०) अभि वत्सन्न स्वसरेषु धेनव+, इव यथा (१८अ० ६८क०) अभि इवं यद्धं मानुम्पियाम्, वाजयन्तः यथा (१८अ० ७५क०) अश्वाम वाजमभि वाजयन्तः ॥

## अश्वस्य वाजिन इति च ॥ १०१ ॥

अश्वस्य वाजिन इति च द्विपदस्य न पूर्वपदान्तो दीर्घ-

मापद्यते, यथा (२२अ० ३७क०) अश्वस्य वाजिनस्त्वचि सिमाः ॥

## विश्व सहभुवपुषवसुषु ॥ १०२ ॥

विश्व इत्येतत्पदं सह इत्येतेषु प्रत्ययेषु दीर्घमापद्यते, सह यथा (७अ० ३६क०) विश्वा साहमवसे नूतनाय, भुव यथा (३३अ० २३क०) अर्चा विश्वा नराय विश्वाभुवे, पुष यथा (२५अ० ४५क०) विश्वा पुषं रयिम्, वसु यथा (२अ० ३क०) गन्धर्वस्त्वा विश्वा वसुः ॥

## नरहामित्रेषु च ॥ १०३ ॥

नरहामित्रेषु च प्रत्ययेषु विश्वशब्दो दीर्घमापद्यते, नर यथा (३३अ० २३क०) अर्चा विश्वा नराय, हा यथा (१७अ० ४८क०) विश्वाहा शर्म यच्छत, मित्र यथा (१३अ० ५७क०) विश्वा मित्रऽऋषिः । पृथग्योगकरणं मित्राणामवग्रहत्वव्युदासप्रज्ञस्यर्थम् । अर्थव्याख्यानार्थं त्ववयवदर्शनम् ॥

## तिष्ठाद्युदात्तम् ॥ १०४ ॥

तिष्ठेत्येतत् पदं दीर्घमापद्यते यद्याद्युदात्तं भवति, यथा (११अ० ४२क०) तिष्ठा देवो न सविता, (१०अ० २२क०) तिष्ठा रथमधियं वज्रहस्ता, आद्युदात्तमिति किम् (८अ० ३३क०) पातिष्ठ हवकत्रथम् ॥

## प्र वणशृङ्गयासेषु ॥ १०५ ॥

प्र इत्येतत् पदं वन शृङ्ग यास इत्येतेषु प्रत्ययेषु दीर्घमापद्यते, वन यथा (१२अ० ५०क०) प्रा वर्णेभिः सजोषसः । शृङ्ग यथा (२४अ० १७क०) प्रा शृङ्गा माहेन्द्राः), यास यथा (३८अ० ११क०) प्रा ग्रामाय स्वाहा ॥

## नि वारहारयोरनवग्रहे ॥ १०६ ॥

नि इत्ययमुपसर्गो वारहारयोः प्रत्यययोर्दीर्घमापद्यते अवग्रहवर्जिते, वार यथा (१८अ० १२क०) नीवाराय मे, हार- यथा (१७अ० ३२क०) नीहारेण प्रावृता, अवयवव्युत्पत्त्यर्थं वचनम् अनवग्रहाणां हि मध्ये वक्ष्यति॥

## नाऽवनयामि ॥ १०७ ॥

अवेत्येतत् पदं न दीर्घमापद्यते नयामीत्येतस्मिन् प्रत्यये यथा (५अ० २५क०) अवं नयामि वैष्णवान्। धारयामेत्येतस्मिन् सूत्रेऽवशब्दस्य नकारे दीर्घत्वं वक्ष्यति तस्यायं पुरस्तादपवादः॥

## धारयाम योजाव सचस्व नुद मोषु जयतो- रुष्य रक्ष युज यच्छ मत्सथ पिपृत गायतातु येन नकारे ॥ १०८ ॥

धारयाम योज अव सचस्व नुद मोषु जयत उरुष्य रक्ष युज यच्छ मत्सथ पिपृत गायत आतु येन एते प्रकृता नकारे प्रत्यये दीर्घमापद्यन्ते, धारयाम यथा (१७अ० ८०क०) धारयामा नमोभिः, योज यथा (३अ० ५२क०) योजान्विन्द्र ते हरी, अव यथा (११अ० ४१क०) अवा नो देव्या धिया, सचस्व यथा (३अ० २४क०) सचस्वा नः स्वस्तये, नुद यथा (१५अ० १क०) अग्ने जातान् प्रणुदा नः, मोषु यथा (३अ० ४६क०) मो षूण इन्द्रात्र पृत्सु देवैः, मोऽर्हति किम् (११अ० ४२क०) ऊर्ध्व ऊ षु ण ऊतये, जयत यथा (१७अ० ४६क०) प्रेता जयता नरः, उरुष्य यथा (३अ० २६क०) उरुष्याणो अघायतः। रक्ष यथा (३अ० ३०क०) रक्षा णो ब्रह्मणस्पते, यज

यथा (३ अ० ३ क०) युजा नो मित्रावरुणा, यच्छ यथा (२६ अ० १३ क०) यच्छा नः शर्म सप्रथाः, मक्षु यथा (३३ अ० ३४ क०) अपि यथा युवानो मत्सथा नः, पिपृत यथा (३३ अ० ४२ क०) निरंहसः पिपृता निरवद्यात्, गायत यथा (३३ अ० ६२ क०) उपास्मै गायता नरः; यातु यथा (३३ अ० ६५ क०) याता नऽइन्द्र इवहन्, (३३ अ० ८७ क०) येन यथा (३४ अ० १७ क०) येना नः पूर्वे पितरः ॥

भव च ॥ १०९ ॥

भवेत्ययं शब्दो दीर्घमापद्यते नकारे प्रत्यये, यथा (१२ अ० ११४ क०) भवा नः सुप्रथस्तमः सखा वृधे, पृथग्योगकरणमुत्तरार्थम् ॥

सचा वरूथ्य वाजस्य पायुषु च ॥ ११० ॥

सचा वरूथ्य वाजस्य पायुः एषु च प्रत्ययेषु भवेत्येतत्पदं दीर्घमापद्यते, सचा यथा (३४ अ० ५६ क०) इन्द्रे प्राशूर्भवा सचा, वरूथ्य यथा (३ अ० २५ क०) उत त्राता शिवो भवा वरूथ्यः, वाजस्य यथा (१२ अ० ११२ क०) भवा वाजस्य सङ्गथे, पायुः यथा (१३ अ० ११ क०) भवा पायुर्विशोऽअस्याऽअदब्धः ॥

अप्टक्तः सौ ॥ १११ ॥

अपृक्तग्रहणेनेह उकारो गृह्यते नाकारो दीर्घविधानात्, अपृक्त उकारो दीर्घमापद्यते सुप्रत्यये, यथा (११ अ० ४२ क०) ऊ षु णः ऊर्ध्वऽऊषु णः, (२० अ० ८१ क०) गोमदूषु णासत्या ॥

रथि तुकारनकारयोः ॥ ११२ ॥

रथेत्येतत्पदं तकारनकारयोः प्रत्यययोर्दीर्घमापद्यते, यथा (१२ अ० ५६ क०) रथी तमः रथी नाम ॥

अथोदारिथ शोच पनय सादयर्जु दृष शत्रु
सलक्ष्माघाघारात्यृतभवत यकारे ॥ ११३ ॥

अथ उदारिथ शोच पनय सादय ऋजु दृष शत्रु सलक्ष्म घ अघ अराति ऋत भवत एते कृत्स्ना यकारे प्रत्यये दीर्घमापद्यन्ते, अथ यथा (१२अ० १२क०) अथाधर्मं विमध्यमग्ं श्रथाय, उदारिथ यथा (१७अ० ७५क०) अस्मायोनि रुदारिथा यजे, शोच यथा (३अ० ३क०) बृहच्छोचा यविष्ठ्य, पनय यथा (१८अ० ६४क०) देवत्रा पनया युजम्, सादय यथा (११अ० ३५क०) सादया यज्ञं सुकृतस्य योनौ, ऋजु यथा (२५अ० १५क०) देवानां भद्रा सुमतिर्ऋजूयताम्, दृष यथा (२०अ० ४६क०) दृषायमाणो दृषभस्तुराषाट्, शत्रु यथा (१२अ० ५क०) शत्रूयतो हन्ता, सलक्ष्म यथा (६अ० २०क०) सलक्ष्मा यद्विषुरूपं भवाति, घ यथा (७अ० ३२क०) आघा येऽअग्निम्, अघ यथा (३अ० २७क०) अघायतः समस्मात्, अराति यथा (१२अ० ५क०) अरातीयतो हन्ता, ऋत यथा (१३अ० २७क०) मधु वाताऽऋतायते, भवत यथा (३३अ० ५१क०) अर्वाञ्चोऽअद्या भवता यजत्राः ॥

व दृधदृजोः ॥ ११४ ॥

व इत्ययं कृत्स्नो दृधदृजोः प्रत्यययोर्दीर्घमापद्यते, दृध यथा (७अ० ३८क०) अस्मद्रूग्वावृधे, दृज यथा (३३अ० ४४क०) प्र वावृजे ॥

अद्य तठ० हकारचकारभवत हणीमहे
देवेषु ॥ ११५ ॥

अद्य इत्ययं कृत्स्नस्तकार हकार चकार भवत हणीमहे देव

इत्येतेषु प्रत्ययेषु दीर्घमापद्यते, नम् यथा (१३अ० ८७क०) अ॒धा त॒मस्य मज्जिमानंम्, इकार यथा (८अ० ४५क०) अ॒द्या इ॒वेम, चकार यथा (२१अ० १क०) इवंमु॒धा चं मृडय, भवत यथा (३३अ० ५१क०) यद्या भंवता यजत्राः, हृणीमहे यथा (३३अ० १७क०) तद्दे॒वाना॒मवो॑ऽअ॒द्या हृ॑णीमहे, देव यथा (३३अ० ४२क०) अ॒द्या दे॑वाः ॥

न होतरि ॥ ११६ ॥

होतृशब्दे प्रत्यये यद्येत्ययं शब्दो न दीर्घमापद्यते, अध-स्तनसूत्रेण प्राप्तस्य प्रतिषेधः, यथा (२८अ० ३४क०) तमद्य हो॑तरिषि॒तः (२१अ० ५८क०) अ॒ग्निम॒द्य होतारमवृणीता॒-यम् ॥

शृणुत त्विषि भजि भवत पिवेत स्म तिष्ठ रच्चा मकारे ॥ ११७ ॥

शृणुत त्विषि भजि भवत पिव इत स्म तिष्ठ रच्च एते शब्दा मकारे प्रत्यये दीर्घमापद्यन्ते, शृणुत यथा (७अ० ३४क०) शृ॒णुता मंऽइमए हवंम्, त्विषि यथा (१६अ० १७क०) गृष्मिव्ठ्ठ-राय॒ त्विषी॑ मते। भजि यथा (२८अ० ३२क०) चि॒त्तं वात-ऽइव॒ भजी॑ मान्, भवत यथा (८अ० ४क०) आदित्यासो॒ भवंता मृडयन्त॑ः, पिव यथा (३३अ० १०क०) पिवा॑ मि॒त्रस्य॒ धामंभिः, इत यथा (३३अ० ४७क०) इ॒ता मं॒रुतो॑ अश्विंना, स्म यथा (३३अ० ८४क०) दे॒यासो॒ हिष्मां मनंवे॒ समंन्यवः। तिष्ठ यथा (३३अ० १३क०) गृवृ॒तामु॒भि तिष्ठा मद्दाएसि, तिष्ठाद्युदात्तमित्याद्युदात्तस्य दीर्घभाव उक्तः, अनुदात्तार्थं आर-म्भः, रच्च यथा (२८अ० ४७क०) रच्चा माकिर्नोंऽअ॒घशंए सऽ-ईशत ॥

विश्वदेव्यसोमौ वत्याम् ॥ ११८ ॥

विश्वदेव्यसोमावेतौ हस्वौ वति प्रत्यये दीर्घमापद्येते, विश्वदेव्यं यथा (११अ० ६१क०) अदितिष्ट्वा देवी विश्वदेव्यावती, सोम यथा (१२अ० ८१क०) अश्वावतीᳫं सोमावतीम्, वत्यामिति किम् (२४अ० १८क०) पितृणाᳫं सोमवताम् ॥

उप महोभिर्नक्तमीकारैकारौकारनकारेभ्यः ॥ ११९ ॥

उप इत्ययं हस्वो दीर्घमापद्यते महोभिः नक्त ईम् ईकारएकारौकारनकारेभ्यः परश्चेद्भवति, महोभिः यथा (२०अ० ४०।४१क०) प्रथमानामहोभिः उपासा नक्ता बृहती, नक्त यथा (१२अ० २क०) नक्तोषासा समनसा, ईम् यथा (१५अ० २४क०) प्रति धेनुमिवायतीमुपासम्, ईकारात् यथा (२८अ० १४क०) देवीऽउपासा नक्ता, एकारात् यथा (२८अ० ३१क०) यजतेऽउपाकेऽउपासा नक्ता, औकारात् यथा (२०अ० १०क०) दिव्येन योनाऽउपासा नक्ता, नकारात् यथा (२४अ० ४०क०) अश्वावतीर्गोमतीर्नऽउपासः, एतेभ्यः पर इति किम् (२०अ० ३६क०) समिद्धऽइन्द्रऽउपसाम् ॥

पूरुषोऽवसाने ॥ १२० ॥

पूरुष इति दीर्घो निपात्यते अवसाने चेद्भवति, यथा (१२अ० ८१क०) न सरिष्याति पूरुषः, अवसान इति किम् (३१अ० २क०) पुरुषऽएव ॥

पूष्णो जहीमस्तेष्वव ॥ १२१ ॥

अवेत्ययं ह्रस्वो दीर्घमापद्यते पूष्णः जहीमः ते इत्येतेषु प्रत्ययेषु, पूष्णः यथा (२५अ० २७क०) अवा पूष्णः, जहीमः

यथा (३५अ० १०क०) यर्वां नक्षीमोऽग्धिवा यं, ते यथा (२८अ० १८क०) यर्वां ते रू पर्मुत्तमम् ॥

नरस्थप्तऽऋत्यौन्तस्तऽश्राद्धुर्नियुद्भिषु यत्र ॥ १२२ ॥

नरः सप्तऽऋत्यौन् नः तऽश्राद्धुः नियुद्भि एतेषु प्रत्ययेषु यत्रे-त्ययं ह्रस्वो दीर्घमापद्यते, नरः यथा (२८अ० ४८क०) यत्रा नरः(ः सद्य विद्रुद्रवन्ति, सप्तऽऋत्यौन्यथा (१७अ० २६क०) यत्रा सप्तऽऋत्यौन् पर॒ऽ, नः यथा (२५अ० २२क०) यत्रा नश्चक्रा जरसं तनूनाम्, तऽश्राद्धुः यथा (२८अ० १५क०) यत्रा तऽश्राद्धुऽ पंरमं जनित्रम्, नियुद्भिः यथा (१३अ० १५क०) यत्रा नियुद्भिः सचसे शिवाभिः ॥

अभिमाति पृतनासु सपत्न घूर्विश्व समत्सु पृतना व्रातेभ्यः सहेः ॥ १२३ ॥

अभिमाति पृतनासु सपत्न धूः विश्व समत्सु पृतना व्रात इत्येतेभ्य उत्तरस्य सहेर्ह्रस्वो दीर्घमापद्यते, अभिमाति यथा (१२अ० ११२क०) सुपर्णान्यभिमातिषाहं, पृतनासु यथा (११अ० ७६क०) जेतारमुग्निमृपृतनासु सासुहिम्, सपत्न यथा (५अ० १०क०) सिंहासि सपत्नसाही, धूः यथा (४अ० ३३क०) उस्रावेतं धूर्षाहौ, विश्व यथा (७अ० ३६क०) विश्वासाहमवसे नूतनाय, समत्सु यथा (१५अ० ४०क०) येना समत्सु सासहं, पृतना यथा (१८अ० ६८क०) पृतनाषाह्याय च, व्रात यथा (२८अ० ४६क०) सुती वौराऽत्तरयो व्रातसाहाऽ ॥

उक्थाच्च सहेः ॥ १२४ ॥

उक्थमग्दात्परस्य ग्रसेर्धातोर्ह्रस्वो दीर्घमापद्यते, यथा (१७अ० ३१क०) उक्थग्रसः उक्थग्रासश्चरन्ति ॥

## 'एवाच्छ चक्रमाथ ॥ १२५ ॥

एव अच्छ चक्रम अथ एते ह्रस्वा व्यञ्जनमात्रे दीर्घमापद्यन्ते, एव यथा (१३अ० २०क०) एवा नो दूर्वे प्रतनु, अच्छ यथा (१६अ० ४क०) गिरिशाच्छा वदामसि, चक्रम यथा (३अ० ४५क०) यदेनश्चकृमा वयम्, अथ यथा (२६अ० २५क०) अथा मन्दस्व जुजुषाणः ॥

## विद्मा सौत्रामख्याम् ॥ १२६ ॥

विद्म इत्ययं ह्रस्वो दीर्घमापद्यते सौत्रामणीमन्त्रं मुक्त्वा, यथा (१२अ० १८क०) विद्मा तेऽअग्ने, असौत्रामख्यामिति किम् (१८अ० ६८क०) यं वयं विद्म यश्च वयं च न प्रविद्म ॥

## अधा यत्स्मग्नावायुषु ॥ १२७ ॥

अध इत्ययं ह्रस्वो व्यञ्जनमात्रे दीर्घमापद्यते, यथा (१७अ० ६४क०) अधा सपत्नानिन्द्राग्नी मे, यत् स्म ग्ना वायुः इत्येतेषु प्रत्ययेषु न दीर्घमापद्यते, यत् यथा (२०अ० ८क०) अमुत्र भूयादध यद्यमस्य, स्म यथा (१५अ० ६२क) अध स्म ते व्रजनम्, ग्ना यथा (३३अ० ४८क०) रुद्रोऽअध ग्नाः, वायुम् यथा (२७अ० २४क०) अध वायुं नियुतः, अयतस्मग्नावायुष्विति किम् (१८अ० ६८क०) अधा यथा नः पितरः ॥

## पूर्वो द्वन्द्वेष्ववायुषु ॥ १२८ ॥

द्वन्द्वेषु समासेषु वायुरहितेषु पूर्वः पदान्तो दीर्घमापद्यते, यथा (२अ० १५क०) अग्नीषोमौ, (२अ० ३क०) मित्रावरुणौ, (२५अ० ६क०) इन्द्राबृहस्पती, द्वन्द्वेष्विति किम्

(४अ० ३३क०) अवी॑रहणी ब्रह्मचोदनी, अवायुष्विति किम् (७अ० ८क०) इन्द्रवायुभ्यान्त्वा ॥

हरि शयेत्येके ॥ १२९ ॥

हरि इत्यस्य एके आचार्य्या दीर्घमिच्छन्ति शयप्रत्यये, यथा (५अ० ८क०) हरि॒ शया हरी॑ शया, एक इति किम् या ते॑ऽग्ने हरि शया ॥

पिवा सोमं पिवा सुतस्य स्या मयो भुवो नूरणे शमीष्व मासहानो मासहन्तासशीतम रीरिषो रीरिषत यामयन्ति हि षा ते वर्द्धया रयिꣳ सुधी हवस्वरा सोम सूयवसिनी श्रोता ग्रावाणो धर्षा मानुषः पाथा दिवो युक्ष्वा हि गसयातमः सिञ्चता सुतस्य रीवापऽउक्था शस्त्राःएवत्ता हवीꣳष्याच्या जानु चामा रेरिहत् चामा भिन्दन्तो रुहेमा स्वस्तये जनयथा च धारयाम पितरा सृधो वोधा मे विचृता वन्ध-मवता हवेषु शृणुधी गिरो रक्षा तोकञ्चर्षणीस-हाश्चर्षणीधृतो येना समत्सु वनेमा तऽक्रध्यामा ते शिक्षा सखिभ्यस्तचारथन्दौया रथेनेता जयत वर्द्धया त्वं प्रथामा घृतस्याजगन्या परस्या ररिमा हि पुरो तता श्रोहाकर्णशुष्पा-कर्णौ प्रकृतिदीर्घाविल्येके नो काशाऽश्वनू काशिन

चक्राजरसम्मिथूकस्तरता सखायः सासह्वानपा- मार्गोभयादतऽष्टतीषहमभीषु सुष्टरीमा जुषा- णा यूजां देवान् येना पावकाश्च्चायन्तो यदी सर- मा स्वदया सुजिह्व निषद्या दधिष्व सदतना रयिष्ट न भरा चिकित्वाँश् चिकित्वा गविष्टा- ववाद्दद्धा चायुनक्तजा रराणः सादन्यमिति च ॥ १३० ॥

पिबा सोमम्, पिबा सुतस्य, स्वा मयो भुवः, नूरणे, शमीष्व, मामहानः, मामहन्ताम्, श्रमीतम, रीरिषः, रीरि- षत, यामयन्ति, हिषा ते, वर्द्धया रयिम्, शृधी हवम्, चरा सोम, सूयवसिनी, श्रोता ग्रावाणः, धर्षा मानुषः, पाथा दिवः, युक्ष्वा हि, गमयातमः, सिञ्चता सुतम्, परीवापः, उक्था शस्त्राणि, यन्ता ह्वीरुषि, याच्या जानु, चामा रेरिहत्, चामा भिन्दन्तः, रुद्रेमा स्वस्तये, जनयथा च, धारयाम, पितरा मृधः, बोधा मे, विचृता बन्धम्, भवता हवेषु, शृणुधी गिरः, रक्षा तोकम्, चर्षणीसहाम्, चर्षणीधृतः, येना समत्सु, वनेमा ते, ऋध्यामा ते, शिक्षा सखिभ्यः, तवारथम्, दीया रथेन, इता जहत, वर्द्धया त्वम्, भवामा घृतस्य, आजगन्ता परस्याः, ररिमा हि, पुरी तता, श्रीडाकर्णः, शुण्ठाकर्णः, नी काशाः, अनू काशेन, चक्राजरसम्, मिथूकाः, तरता सखायः, सासह्वान्, अपामार्गः, उभयादतः, ऋतीषहम्, अभीषु, सुष्टरीमा जुषाणा, यजा देवान्, येना पावकं, अश्चायन्तः, यदी सरमा, स्वदया सुजिह्व, निषद्या दधिष्व, सदतना रयि-

छन, भरा चिकित्वान्, चिकित्सागविष्टौ, अवाददत, रक्षा च, आयुनक्सृजा रराणः, सादन्यम्, एते प्रश्ना दीर्घमापद्यन्ते । पिब सोमम् यथा (२६अ० ४क०) पिबा सोम॑ऽ शत-क्रतो, (७अ० ३६क०) पिबा सोमं मनुष्वधं मदाय, पिब सुतस्य यथा (३३अ० ७०क०) पिबा सुतस्यान्धसो मदाय, स मयो भुवः यथा (११अ० ५०क०) आपो हि ष्ठा मयो भुव॑ः, नु रथे यथा (१७अ० १०क०) तूर्वन्नयामन्नेतशस्य नू रथे, अमीष्व यथा (१अ० १५क० हविः ऽ अमीष्व, ममह्वानः यथा (१०अ० ५५क०) समिद्धेऽअग्नावधि मामहानः), ममहन्ताम् यथा (३३अ० ४२क०) तन्नो मित्रो वरुणो मामहन्ताम्, अग्नि तम यथा (२अ० २०क०) अग्ने दब्धायोऽशीतम, रीरिषः यथा (१६अ० १६क०) मानो॒ऽअश्वे॑षु रीरिषः, रीरिषत यथा (२५अ० २२क०) मा नो मध्या रीरिषतायुः, यमयन्ति यथा (२५अ० ३८क०) प्रिया देवेष्वायामयन्ति, हि स्म ते यथा (३अ० ४६क०) अस्ति हिष्मा ते, हीति किम् (१५अ० ६२क०) अर्ध स्म ते व्रजनम्, वर्धय रयिम् यथा (३अ० २४क०) अर्धा नो वर्धया रयिम्, श्रुधि हवम् यथा (२१अ० १क०) इमं मे वरुण श्रुधी हवम्, चर सोम यथा (४अ० ३७क०) प्रचरा सोम दुर्यान्, श्रोत ग्रावाणः यथा (६अ० २६क०) श्रोता ग्रावाणो विदुषो न यज्ञम्, धर्प मानुषः यथा (६अ० ८क०) मुष्णामि धर्षा मानुषः, पाय दिवः यथा(८अ० ३१क०) पाया दिवो विमहसः, युच्व हि यथा (८अ० ३४क०) युच्वा हि केशिना हरी, गमय तमः यथा (८अ० ४४क०) अधरं गमया तमः, सिञ्चत यथा (१८अ० २क०) परीतो षिञ्चता सुतम्, परि वापः यथा (१८अ० २१क०) परी वापः पयो दधि, उक्थ शस्त्राणि यथा (१८अ० १८क०) छन्दोभिरुक्था शस्त्राणि, अत्त हवींषि यथा (१८अ०

६८क०) प्रत्ता हवींष्यपि पर्यतानि बर्हिषि, आच्य जानु यथा (१८अ० ६२क०) आच्या जानु दक्षिणतः। धाम रेरिहत् यथा (१२अ० ६क०) धामा रेरिहद्धीवर्ध+, धाम भिन्दन्तः यथा (१८अ० ६८क०) धामा भिन्दन्तोऽअप्रपीः। वहेम स्वस्तये यथा (२१अ० ६क०) अस्ववन्तीमा वहेमा स्वस्तये, जनयथ च नः यथा (११अ० ५२क०) आपो जनयथा च नः, धारय मयि यथा (११अ० ५८क०) धारया मयि प्रजाम्, तर स्पृधः यथा (११अ० ७२क०) अग्ने त्वन्तरा स्पृध+, बोध मे यथा (१२अ० ४२क०) बोधा मे अस्य, विचृत बन्धम् यथा (११अ० ६३क०) विचृता बन्धमेतम्, अवत हवेषु यथा (१७अ० ४३क०) देवा अवता हवेषु, शृणुधि गिरः यथा (१३अ० ५२क०) प्राह्नि शृणुधी गिर+, रक्ष तोकम् यथा (१३अ० ५२क०) रक्षा तोकमुतत्मना, चर्षणिसहाम् यथा (२८अ० १क०) चर्षणीसहं वेत्वाज्यस्य, चर्षणिधृतः यथा (७अ० ३३क०) ओमासश्चर्षणीधृतः, येन समत्सु यथा (१५अ० ४०क०) येना समत्सु सासहे+, वनेम ते यथा (१५अ० ४०क०) वनेमा तेऽअभिष्टिभिः, ऋध्याम ते यथा (१५अ० ४४क०) ऋध्यामा तऽओहैः, शिक्ष सखिभ्यः यथा (१७अ० २१क०) शिक्षा सखिभ्यो हविषि, तत्र रथम् यथा (२९अ० ४१क०) तत्रा रथमुप शग्मं सदेम, दीय रथेन यथा (१७अ० ३६क०) बृहस्पते परि दीया रथेन, इत जयत यथा (१७अ० ४६क०) प्रेता जयता नरः, वर्त्तय त्वम् यथा (१७अ० ५२क०) तमग्ने वर्त्तया त्वम्, पत्नवाम घृतस्य यथा (१७अ० ९०क०) वयन्नाम प्रब्रवामा घृतस्य, जगन्य परस्याः यथा (१८अ० ७१क०) परावतऽआजगन्था परस्याः, ररिम हि कामम् यथा (१७अ० ७५क०) वयन्तेऽअद्य ररिमा हि कामम्, परि तना यथा (११अ० ८क०) सुत्रर्तारं परी

तता, यस्य पदस्यापवादोऽभिप्रेतः तथा हि, (३८अ० ८क०) मुशुपतं(ः पुरीतदित्येतदपि भवति, श्रीहाकर्णः शुण्ठाकर्णः एतौ शब्दौ प्रकृतिदीर्घावित्येके आचार्या मन्यन्ते, यथा (२४अ० ४क०) श्रीहाकर्ण ÷ शुण्ठाकर्णः, नि काशाः यथा (२४अ० १८क०) वृभ्रुनी काशाः पितृणाम्, अनु काशेन यथा (२५अ० २क०) अन्तरमनू काशेने, चक्रजरसम् यथा (२५अ० २२क०) यत्रा नश्च क्रा जरसन्तनूनाम्, मिथु कः यथा (२५अ० ४३क०) गात्राण्यसिना मिथू कः, तरत सखायः यथा (३५अ० १०क०) प्रतरता सखायः, ससचान् यथा (३८अ० ७क०) सासखाँर्योभियुवा च, अपमार्ग यथा (३५अ० ११क०) अर्पा मार्ग त्वमस्मत्, उभय दतः यथा (३१अ० ८क०) ये के चोभयादत(ः, स्तति यहम् यथा (२६अ० ११क०) तवो दक्षस्ततीयहम्, अभि सु यथा (३६अ० ६क०) अभी षुणः सखीनाम्, सुष्टरीम जुषाणा यथा (२८अ० ४क०) बृहिःऽ सुष्टरीमा जुषाणा, यज देवान् यथा (३३अ० ३क०) यजा देवाँ२॥ऽऋतस्बृहत्, येन पावक यथा (३३अ० ३२क०) येना पावक चक्षसा, अस्खयन्तः यथा (२७अ० ३६क०) अस्खायन्तो मघवन्, यदि सरमा यथा (३३अ० ५८क०) विदद्यदी सरमा, स्वदय सुजिह्व यथा (२८अ० २६क०) समञ्जन् स्वदया सुजिह्व, निपद्य दधिष्व यथा (२६अ० २३क०) बृहिषा निपद्या दधिष्व। सदतन रणिष्टन यथा (२६अ० २४क०) सदतना रणिष्टन, भर चिकित्वान् यथा (३४अ० १४क०) उत्तानायामवभरा चिकित्वान्, चिकित्सगविष्टी यथा (३४अ० २२क०) प्रचिकित्सागविष्टौ, अवददत् यथा (३४अ० ३६क०) भगेमां धियमुदवा ददन्न(ः, रक्ष च यथा (३४अ० २७क०) रक्षा च नोऽअधि च बूहि देव, अयनक यथा (२८अ० ४३क०) अमेनं दूतं चित-

ऽए नमायुनक्, स्वज रराण: यथा (२७अ० २१क०) वनंस्पते-ऽवंसृजा रराण:, सदन्यम् यथा (३४अ० २१क०) सा टुन्धु विट्टलूयम्॥

## अनुनासिकमुपधा प्रागन्तस्थायाः ॥१३१॥

ह्रस्वो दीर्घः प्लुतः सानुनासिको निरनुनासिक उदात्तो-ऽनुदात्तः स्वरित इति स्वरधर्माः तत्र पदे दृष्टस्यान्यथाभावो विकार उच्यते स चात्र स्वरे एवाधिकृतो न व्यञ्जने यतो दीर्घमित्यारभ्यते अत इहापि स्वरस्यैवानुनासिकं विकार उच्यते इयांस्तु विशेषः यत्र नकारमकारावेव परभूतौ तयोश्च विकारे सति स्वरस्य विकारः। यत्र तु तयोः प्रकृतिभावो वा लोपो वा तत्र स्वरस्यापि विकारो न भवति, यथा (१२अ० ७०क०) अस्मान् सीते इत्येवमादि, (४अ० ८सू०) यत्प्रागन्तस्थामंग्रहणात्, यमित ऊर्ध्वमनुक्रमिष्यामस्तत्रोपधाभूतः स्वरोऽनुनासिकं स्वरं विकारमापद्यते इत्येतदधिकृतं वेदितव्यम् वक्ष्यति (अ० ३। सू० १३४। १३५) "नुः" "चच्छयोः शम्" यथा (२४ २९। २४। २८) पृषीन् चक्षुषे ह्वाचे पृषीँश्चक्षुषे, गवयान् त्वष्ट्रे हृहस्पतये गवयाँस्त्वष्ट्रऽउष्ट्रान्।

## स्वर औपशविः ॥ १३२ ॥

औपशविराचार्य्यः स्वरएव प्रत्यय उपधानुनासिकमिच्छति, नुरिति वक्ष्यति अतस्तस्यैव परभूतो यः स्वर उक्तः उपधा च तस्यैव ग्राह्या, यथा (२६अ० १०क०) महान् इन्द्रः महाँ २॥ऽइन्द्रो वज्रहस्तः, (११अ० ८२क०) त्वान् अहम् उर्वं-यामि त्वां २॥ऽअहम्, (७अ० ३७क०) यज्ञ न अप जहि यव १॥ रप न्मृधो नुदस्व, स्वर इति किम् (२४अ० २८क०) गवयान् त्वष्ट्रे गवयांस्त्वष्ट्रे ।

अनुस्वारेण व्यञ्जने ॥ १३३ ॥

नकारात् परे व्यञ्जनेऽनुस्वारेण व्यवधानमिच्छत्यागमिकेन शौपशविराचार्य्यः, अयञ्च उपधानकार्य्योरितरो भवति यत्र नकारस्य शकारः षकारो वा विहितस्तत्रापि भवति, (४अ० १सू०) "अनुस्वार ठं० रोफिश्वति" वचनात्, यथा शुचीन् चक्षुषे शु॒ची॑ँश्चक्षु॑षे, गवयान् त्वष्ट्रे गव॒याँस्त्वष्ट्रे॑ ॥

नुः ॥ १३४ ॥

नकारोऽधिकृतो वेदितव्यः ॥

चच्छयोः शम् ॥ १३५ ॥

चकारच्छकारयोः प्रत्यययोर्नकारः शकारमापद्यते अनुनासिकं चोपधा, यथा (१६अ० ५क०) अह्नीन् च अ॒ह्रीँश्च सर्वान्, शुचीँ चक्षुषे, छकारोदाहरणं मृग्यम्, रूपोदाहरणन्तु विद्यते यथा विद्वान् छकारः विद्वांश्छकारः ॥

तथयोः सम् ॥ १३६ ॥

तकारथकारयोः प्रत्यययोर्नकारः सकारमापद्यते अनुनासिकं चोपधा, यथा (२४अ० २८क०) गवयान् त्वष्ट्रे गव॒याँस्त्वष्ट्रे॑, (१७अ० ११क०) अन्यान् ते अ॒न्याँस्ते॑, थकारस्य रूपोदाहरणम् यथा विद्वान् थकारः विद्वांस्थकारः ॥

दधन्वान् स्ववान्यकारे लोपम् ॥ १३७ ॥

दधन्वान् स्ववान् एतौ नकारौ यकारे प्रत्यये लोपमापद्येते, अत्र च लोपविधानादुपधानुनासिक्यमपि न भवति, यथा सोमस्य ... दधन्वान् ... स्ववां ...

यित्वा तमाकारं यत्र लोपो, विधीयते, यथा (१८अ० २क०) दधन्वान् यः दधन्वा यो नर्योऽअप्स्वन्तरा, स्ववान् यथा (३४अ० २६क०) स्ववाँ३ ।। यास्ववाँ३ ।।

रयिष्टधे च ॥ १३८ ॥

रयिष्टध इत्येतस्मिंश्च प्रत्यये पूर्वो नकारो लोपमापद्यते, यथा (२७अ० २३क०) अश्वान् रयिष्टधः पीवोऽअन्ना रयिष्टधं ÷, उक्तहेतुत्वादवाप्युपधानुनासिकत्वन्न भवति ॥

नपुंसकादिकारस्य ॥ १३९ ॥

नपुंसकादुत्तरो यो नकारस्तस्य सम्बन्धिन इकारस्य लोपो भवति, यथा (२७अ० ५३क०) एमन् सादयामि, भस्मन् सादयामि, एमनि भस्मनीति प्राप्ते इकारलोपश्छान्दसः, नपुंसकादुत्तरस्येकारस्य लोप उक्तोऽनपुंसकादपि भवति। यथा (१७अ० १क०) अश्मन्नूर्जम् अश्मनीति प्राप्ते ॥

न सप्तम्यामन्त्रितयोः ॥ १४० ॥

सप्तम्यामन्त्रितयोर्विभक्त्योः सम्बन्धिन इकारस्य न लोपो भवति, यथा (१३अ० ५३क०) (ध्रुपान्त्वा सर्धिषि, ध्रुपान्त्वा पाथसि, एतं सप्तम्या उदाहरणे (१अ० २५क०) हे पृथिवि आमन्त्रितविभक्तेरुदाहरणम् अनकारार्थं आरम्भः ।

नॄन्पकारे विसर्जनीयम् ॥ १४१ ॥

नॄनित्ययं नकारः पकारे प्रत्यये विसर्जनीयमापद्यते अनुनासिकं चोपधा, यथा (१३अ० ५२क०) नॄन् पाहि नॄँः पाहि शृणुधी गिरं : ॥

शत्रून् परिधीन् क्रतून् वनस्पतीन् स्वरे रेफम् ॥ १४२ ॥

अवृन् परिधीन् क्रतून् वनस्पतीन् एते नकाराः स्वरे प्रत्यये अवृन् रेफमापद्यन्ते अनुनासिकं चोपधा, अवृन् यथा (७अ० ३७क०) अप जहि अवूँ१॥रपुरुर्षं+। परिधीन् यथा (१८अ० ५३क०) इन्वन्न दातः परिधीँ१॥ रपं+, क्रतून् यथा (१८अ० ४०क०) अग्ने क्रत्वा क्रतूँ१॥ रनुं, वनस्पतीन् यथा (१३अ० ७क०) ये वा वनस्पतीँ१॥रनु॥

## आकारोपधो यकारम् ॥ १४३ ॥

आकारोपधो नकारो यकारमापद्यते स्वर इत्यनुवर्त्तते अनुनासिकं चोपधा, यथा (७अ० ४०क०) महान् इन्द्रः मँहान् य इन्द्र इत्येवं संहिता प्राप्नोति ततो (४अ० १२५सू०) "यवयोः पदान्तयोः स्वरमध्ये लोपः" इति यकारलोपे कृते "न परकालः पूर्वकाले पुनरिति" सन्धिर्न भवति ततो महाँ २ऽऽ इन्द्र इत्येतद्रूपं सम्भवति, ननु यथा (प्रा० ३अ० १३७सू०) "दधन्वान् स्ववान् यकारे लोपः" इति नकारलोपे कृते सत्युपधानुनासिकत्वं प्रवर्त्तते एवमिहापि नकारस्य यकारीभूतस्याश्रवणादुपधानुनासिकत्वं प्रवर्त्तते तत्कथमुपधानुनासिकत्वमिति लुप्तस्यापि स्वकार्य्यकारणादित्यदोषः, यदि हि यकारो व्यञ्जनकार्य्यं न कुर्य्यात् कथमिह स्वरयोः सन्धिर्न स्यात् अतः स्वकार्य्यकारणादुपधानुनासिक्यमपि भवति यथा (७अ० ४०क०) वृष्टिमान् इव पर्जन्यो वृष्टिमा २ँ॥ऽ इव॥

## न तमे ॥ १४४ ॥

यन्नकारस्य तकारे प्रत्यये विहितन्तत्तमप्रत्यये न भवति, यथा (८अ० ४८क०) मदिन् तमानाम् मदिन्तमानात्वा, मधुन् तमानाम् मधुन्तमानात्वा, तयोः समित्यस्यापवादः।

## निर्जगन्वान् तमसि ॥ १४५ ॥

निर्जगन्वानित्ययं नकारस्तमसि प्रत्यये न विकारमापद्यते, यथा (१२ष० १३क०) निर्जगन्वान् तमसः निर्जगन्वान्तमसो ज्योतिषागात् ॥

धामञ्छत्रूँश्चिकित्वाँस्त्वं पूषन्नर्वन्निति च ॥१४६॥

धामन् शत्रून् चिकित्वान् त्वम् पूषन् अर्वन् एते नकारा न विकारमापद्यन्ते। धामन् यथा (१७ष० ८८क०) धामन्ते विश्वं भुवनम्। शत्रून् यथा (१८ष० ७१क०) शत्रून्ताढि विमृधो नुदस्व। चिकित्वान् त्वम् यथा (२८ष० २५क०) या च वह मित्र महश्चिकित्वान्त्वम्। त्वमिति किम् (७ष० १५क०) स प्रथमो वृहस्पतिश्चिकित्वाँस्तस्मै। पूषन् यथा (३४ष० ४१क०) पूषन्तव व्रते वयम्। अर्वन् यथा (२८ष० २२क०) तव शरीरं पतयिष्णुर्वन्तव चित्तम्। इति चेत्यस्यावयस्यार्थः। इति शब्दः प्रकारदर्शनार्थः। यथा अधस्तनसूत्रयोस्तकारे नकारस्य प्रकृतिभावः एवमिहापि नकारस्य प्रकृतिभाव एव तथा च व्याख्यातम्। चकारस्तकारापवादावधिद्योतनार्थः॥

अष्टादौ चाध्याये ॥ १४७ ॥

स्वर इति वर्त्तते अष्टस्तूपर इत्येतस्मिन्नध्याये नकार आकारोपधः स्वरे प्रत्यये प्रकृत्या भवति। "आकारोपधो यकारम्" इत्यस्यापवादः। यथा (२४ष० १८क०) शिशुमारान् आलभते समुद्राय शिशुमारानालभते। मण्डूकान् अद्भ्यः मण्डूकानद्भ्यः। स्वरानुवृत्तिरिति किम् गवयाँस्त्वष्ट्रे, शुंशीयश्चुपे॥

मनुष्याँस्ताँल्लोकानमिवानुदि ॥ १४८ ॥

मनुष्यान् तान् लोकान् पर्मिवान् एते नकाराः प्रकृत्या भवन्ति उदि उपसर्गे प्रत्यये। मनुष्यान् यथा (८अ॰ ३१क॰) मनुष्यान् उत मनुष्यानुदजयताम्। तान् यथा तान् उत तानुजे॑षम्। लोकान् यथा त्रीँल्लोकानुदजयताम्। पर्मिवान् यथा (११अ॰ ८२क॰) छिनोमि ब्रह्मणामित्रानुन्नयामि स्वान् ॥

## आप्नोतीत्योश्च ॥ २४९ ॥

आप्नोतौ, प्रत्यये इतौ च नकारो न विकारमापद्यते। आप्नोति, यथा (१९अ॰ २९क॰) भद्यान् आप्नोति इडामिभं- ध्यानाप्नोति। इति यथा (११अ॰ ५९क॰) सुपद्यान् इति अदितिः सुपद्यानिति ॥

## सङ्क्रमे च वैष्णवान् ॥ १५० ॥

वैष्णवानित्ययं नकारो न विकारमापद्यते स्वरे प्रत्यये। सङ्क्रमय क्रमे भवति अतः क्रमसंहितायामित्यर्थः यथा (५अ॰ २६कं॰) वैष्णवान् अव वैष्णवानवं ॥

गृहानैमि गृहानुपह्वयामहे वर्चस्वानहम्म- नुष्यानन्तरिक्षमग्निष्वात्तान्टतुमतः पयस्वानग्ने तानश्विना पतङ्गानसन्दितः स्वर्गानपां पतिः सपत्नानिन्द्रसपत्नानिन्द्राग्नी नभस्वानार्द्रदा- नुर्विद्वानग्नेर्देवानस्वेधतानड्वानाशुरथैतानष्टौ वि- रूपानालभत एतावानस्यायुष्मानग्ने वायव्याना- रण्याः प्रविद्वानग्निनानड्वानधीरामौ शवूननुयँ- य्यातुधानानस्मादस्मानरिष्टेभिरिति ॥ १५१ ॥

एतेषां द्विपदानां पूर्वं पदान्तीया नकाराः प्रकृत्या भवन्ति।
(३अ० ३१क०) गृहानैमि मनसा मोदमानः। (३अ० ४२क०)
गृहानुपह्वयामहे। (८अ० ३८क०) वर्चस्वानुहं मनुष्येषु।
(८अ० ६०क०) मनुष्यानन्तरिक्षमगन्। (१९अ० ६१क०) अग्नि-
ष्वात्तानृतुमतो हवामहे। (२०अ० २२क०) पयस्वानग्न-
ऽआगमन्तम्। (२१अ० ४२क०) तानश्विना सरस्वती।
(१२अ० १०क०) तपूंष्यग्ने जुह्वा पतङ्गानसन्दितः। (१३अ०
३१क०) स्वर्गानपां पतिर्वृषभः। (१७अ० ६४क०) अर्धा
सुपर्णानिन्द्राग्नी मे। (१८अ० ४५क०) समुद्रोऽसि नभस्वाना-
र्द्रदानुः। (१७अ० ६६क०) प्राचीमनु प्रदिशं प्रेहि विद्वानग्नेः।
(१८अ० ७५क०) देवानसेधता मन्मना। (२२अ० २२क०)
अनड्वानाशुः सप्तिः पुरन्धिः। (३०अ० २२क०) अथैता-
नष्टौ विरूपानालभते। (३१अ० ३क०) एतावानस्य महिमा।
(३५अ० १७क०) आयुष्मानग्ने हविषा वृधानः। (३१अ०
६क०) वायव्यानारण्या ग्राम्याश्च ये। प्रविद्वानग्निना।
(२९अ० ५९क०) अनड्वानधो रामौ। (३३अ० ८०क०) अच-
ननु यंविश्वे मरुत्व सूमाः। नकारस्य रेफापवादः। इतरत्र तु
सर्वत्र यकारापवादः। (३४अ० २६क०) अपसेधन्नृचसो यातु-
धानानस्थात्। (३४अ० ३०क०) द्युभिरक्तुभिः परिपातम-
स्मानरिष्टेभिः॥

इदं वृत्तिः ॥ १५२ ॥

इत्युक्तार्थम् ॥

इति कात्यायनकृतौ प्रातिशाख्यसूत्रे तृतीयोऽध्यायः॥

आनन्दपुरवास्तव्यवज्रटसूनुना उवटेन कृते मातृमोदाख्ये
प्रातिशाख्यनिर्मलभाष्ये तृतीयोऽध्यायः समाप्तः॥

## चतुर्थोऽध्यायः ।

### अनुस्वारᳬ रोषसु मकारः ॥ १ ॥

अनितावध्याय इत्यनेन सूत्रेण योऽवधित्वेन वर्णितः । अतोऽवधिपरिज्ञापनार्थमध्यायसमाप्तिः कृता कात्यायनाचार्य्येण । आह च । अनितावध्याय इति कृतं सूत्रं यतः पुरा । अतस्तदवधिज्ञप्तिः क्रियतेऽध्यायसङ्ख्यया । अत्रावधिसमाधीतं पदमन्तविकारिमत् । आचार्य्यंणोच्यते तस्य प्रागुक्त्यादिप्रयोजनम् । मकारोऽनुस्वारमापद्यते रोषसु प्रत्ययेषु । रेफे यथा (८अ० ३क०) अपाम् रसे॑न । अ॒पाᳬ रसे॑न॒ वरु॑णः । ऊषसु यथा (१७अ० ७६क० )त्वाम् शश्वन्तः त्वाᳬ शश्व॑न्त॒ऽउप॑यन्ति॒ वाजाः॑ । (४अ० २५क०) दे॒वᳬ॑ स॑वि॒तार॑मो॒ण्योः॑ । (१३अ० १०क०) तपू॑ᳬषि । (८अ० २३क०) उ॒रुᳬ हि राजा॑ ॥

### अनुस्वारान्तःपदेऽरेफे ॥ २ ॥

नकारोऽनुस्वारमापद्यते । अशब्दान्मकारश्च । पदस्य मध्ये अरेफे रेफशब्दस्य पर्य्युदासात् । ऊष्मस्वेवानुस्वारापत्तिर्भवति । यथा (८अ० १८क०) जघिवान् सः । ज॒घ्नि॒वाᳬ स॑ । (८अ० १८क०) पपिवान् सः । प॒पि॒वाᳬ स॑ । (१३अ० १०क०) तपू॑म् षि तपू॑ᳬष्यग्ने । (१७अ० ७५क०) हवीन् षि । ह॒वीᳬषि॑ । एते नकारप्रकृतयोऽनुस्वाराः ॥

### वᳬश ॥ ३ ॥

वनतेर्धातोर्यमतेर्वणादेर्यो वश्प्रत्ययः । वनतेर्यमतेर्धातोरौणादिकशप्रत्यये नकारप्रकृतिर्मकारप्रकृतिर्वाऽनुस्वारः । सन्देहात्सतकारेण काण्ठरवेण सूत्रं कृत्वा पठितः । अतो नकारप्रकृतिर्वा मकारप्रकृतिर्वाऽनुस्वारः । (१६अ० ४३क०)

किम् यिलाय किृ॒ठ॑० ग्रि॒लाय॑ (२अ० २५क०) प्र॒क्रंस्त॒ । (२५अ० ४५क०) पु॒ठ॑० सः । एते मकारप्रकृत्योऽनुस्वारा भवन्ति । एवमन्येऽप्यन्वेषितव्याः । अरेफ इति किम् । वृक्ष्णः । (११अ० ७४क०) यद्वृक्षोऽव॑ति॒सर्प॑ति ॥

## अनुनासिका चोपधा ॥ ४ ॥

अतोऽधिकारादयमन्यं विकारं वक्ष्यामो मकारनकारयोस्तत्रानुनासिका चोपधा भविष्यतीत्यधिकृतं वेदितव्यम् । ननु "अनुनासिकमुपधा प्रागन्तस्थायाः" इति उपधाऽनुनासिक्यं विहितमेव किमनेन सूत्रेण क्रियते । एवन्तर्हि व्यवस्थार्थं वचनम् । यस्मिन् पक्षे अनुस्वारो न भविष्यति । तस्मिन् पक्षे उपधाया आनुनासिक्यं भविष्यति । अधिकारार्थोऽयमारम्भः ॥

## लोपं काश्यपशाकटायनौ ॥ ५ ॥

काश्यपशाकटायनावाचार्यौ मकारनकारयोर्लोपं मन्यते । अस्मिन् पक्षे वाक्यद्वयम् । अनुनासिका चोपधा भवति । यथा अ॒पाँ रसे॑न । पक्षे अपाए रसे॑न । त्वाँ ग्रस॑न्तः । त्वाए ग्रस॑न्तः । तँ॑ सवि॒तुः । ताए सवि॒तुः । त्वँ हि । त्वाए हि । तपूँ॑षि । तपू॑एषि । अक्रँस्त । अक्रएस्त । किँ यिलाय॑ । किृ॒ठ॑० ग्रि॒लाय॑ । (२०अ० १२क०) यजूँ॑षि । यजू॑एषि सामभिः ॥

## प्रकृत्या सम्राट्साम्राजि ॥ ६ ॥

सम्राट्शब्दे समः सम्बन्धी मकारो रेफे परभूते प्रकृत्या भवति, तथा साम्राज्यशब्दे समो मकारो रेफे परे सति प्रकृत्या भवति । यथा (२अ० ५क०) स॒म्राडिति॒ सम् । राट् ।

सम्राट्चक्षु'÷। (४अ० २४कं०)। साम्राज्यमिति साम। राज्यम्। साम्राज्यञ्चचेति मे। (१८अ० ३०क०) साम्राज्येनाभिषिञ्चामि॥

## यं चे यकारादुकारोदयात्॥ ७॥

यकारादुकारोदयात्परो मकारः यकारमापद्यते, चकारे परभूते अनुनासिका चोपधा भवति। यथा (३०अ० २२क०) पुम् चली। पुँश्चली कितवः)। च इति किम्। (२५अ० ४५क०) पुठ्ठ• सः)। यकारादुकारोदयादिति किम्। (१६अ० ८क०) अमु च। (२अ० २३क०) विमुञ्चति॥

## समन्तःपदे कखपफेष्वनूष्मपरेषु॥ ८॥

सकारमापद्यते मकारः पदमध्ये कखपफेषु प्रत्ययेषु किं विशिष्टेषु अनूष्मपरेषु यद्यूष्माणः परभूता न भवन्ति अनुनासिका चोपधा। यथा (७अ० १४क०) सम् कृतिः। संस्कृतिः)। पुम् खाताः। पुंस्खाताः)। पुम् पुत्राः। पुंस्पुत्राः)। पुम् फलाः। पुंस्फलाः)। अनूष्मपरेष्विति किम्। सम् क्षरे। संक्षरेऽमृतऽइति॥

## नुश्चाम्रेडिते॥ ९॥

नकारः चशब्दान्मकारः सकारमापद्यते अनुनासिका चोपधा चाम्रेडिते पदे कखपफेष्वनूष्मपरेषु। पदमध्ये यथा कान् करवाणि। कांस्करवाणि। कान् कानामन्त्रयति। कांस्कानामन्त्रयति चाम्रेडिते किम्। कान् करवाणि। इह यान्युदाहरणानि संहितायां नोपलभ्यन्ते तेषामपि लक्षणं प्रसङ्गात् क्रियमाणं न विरुध्यत एव यथा जलाहरणस्य मत्स्याहरणं पुष्पाहारस्य फलाहरणं च न विरुध्यते॥

अन्तस्थामन्तस्थास्वनुनासिकां परसस्थानाम् ॥ १० ॥

अन्तस्थामापद्यते मकारः अन्तस्थासु परभूतासु परस्या अन्तस्थायाः समानस्थानां यदि नामानुनासिकां समानाम्। यथा (१अ०२२क०) सम् यौमि। सँय्यौमीदम्। (११अ० १३क०) रासभम् युवम्। युञ्जाथाᳬ रासँभय्युवम्। (१अ० २१क०) सम् वपामि। सँव्वपामि। (२०अ० २५क०) तम् लोकम्। तँल्लोकं पुण्यम्। रेफेऽनुस्वारो विहितः।

हि ॥ ११ ॥

"अन्तराः कालाः" इत्युक्तम्। अतस्तत्कालावधिद्योतनार्थं हिशब्दः॥

स्पर्शे परपञ्चमम् ॥ १२ ॥

मकारः स्पर्शे प्रत्यये परस्य प्रत्ययभूतस्य पञ्चममापद्यते। परः स्पर्शो यस्मिन् वर्गे तस्य वर्गस्य पञ्चममित्यर्थः। यथा (४अ० ११क०) व्रतम् कृणुत। व्रतङ्कृणुत। (१अ० ५क०) व्रतम् चरिष्यामि। व्रतञ्चरिष्यामि। (२अ० १२क०) एतम् ते देव। एतन्ते देव सवितः। (१९अ० ६८क०) इदम् पितृभ्यः। इदम्पितृभ्यो नमः। (१२अ० ४६क०) सम् ज्ञानमसि। सञ्ज्ञानमसि।

तकारो ले लम् ॥ १३ ॥

तकारो लकारे प्रत्यये लकारमापद्यते। यथा (१४अ० ३१क०) आसीत् लोकम्। आसील्लोकम्। (१२अ० ४५क०) परिचित् लोकम्। परिचिल्लोकम्। क्रमसंहितोदाहरणम्।

नुस्वाऽनुनासिकम् ॥ १४ ॥

नकारो लकारप्रत्यये लकारमापद्यते। यदि समाना-ऽनुनासिकम्। यथा (३ष० २१क०) अस्मिन् लोके। अस्मिँल्लो-केऽस्मिन् चये। (८घ० ३१क०) त्रीन् लोकान्। त्रीँल्लोका-नुदजयत्॥

## ङ्नौ काभ्यार्ठ॑ सकारे॥ १५॥

ङकारनकारौ यथासङ्ख्यं ककारतकाराभ्यां व्यवधीयेते-सकारे प्रत्यये। यथा (१८घ० ३क०) प्राङ् सोमः। प्राङ्क्सो-मोऽअति द्रुतः। प्रत्यङ् सोमः। प्रत्यङ्क्सोमोऽअतिद्रुतः। (१३अ० ३१क०) त्रीन् समुद्रान्। त्रीन्त्समुद्रान्त्समसृपत्। (१२अ० ७०क०) अस्मान् सीते। अस्मान्त्सीते पयसा॥

## न दाल्भ्यस्य॥ १६॥

दाल्भ्यस्याचार्य्यस्य मते नैतावागमौ भवतः। प्राङ्सोमः। प्रत्यङ्सोमः। त्रीन् समुद्रान्। अस्मान्सीते॥

## रलाभ्यामृल्लवर्णाभ्यामूष्मणि स्वरोदये सर्वत्र॥१७॥

रेफलकारौ ऋलृवर्णाभ्यां ऋलृसदृशश्रुतिभ्यां यथासंख्यं व्यवधीयेते ऊष्मणि परभूते स्वरपरे सर्वत्र संहितायां पदे च। अन्तःपदे नानापदे च यौ तौ विधायकावुक्तौ तौ स्वरावुत व्यञ्जनाविति। शृणु। ऋलृस्वरसदृशौ व्यञ्जनावर्धमात्रका-विति ब्रूमः। तौ स्वरभक्तिरित्यन्येषु पदेषु प्रसिद्धौ। न चैतौ वर्णौ रेफलकारयोरूष्मणां च मध्यवर्तिनावपि सन्तौ संयो-गस्य विघातं कुरुतः। स्वरसदृशत्वात्। तथा चाह शौनकः। "न संयोगं स्वरभक्तिर्विहन्ति" यथा (३अ० ३८क०) गार्ह-पत्यः। अत्र हकाररेफयोरन्तरावपि स्वरभक्तिः सती रेफह-कारयोः संयोगं न विहन्ति। एवमन्यत्रापि द्रष्टव्यम्। (१२अ० ८८क०) अमृं ऽउउपचितामपि। (५अ० ४१क०) शतवल्शः।

(२३अ० ५१क०) उपवलुप्तामसि त्वा । पदमध्योदाहरणम् (२अ० ९क०) वेद्रौत्वम् । (२२अ० ११क०) सुवितुर्हवामहे । स्वरोदय इति किम् । (२१अ० ४३क०) प्रावृतः । (२८अ० १क०) दिवो वर्षान् । (२५अ० १क०) स्वर्द्ववर्स्वः । (२५अ० ९क०) मधुभिष्कान्दुनीः ॥

## प्रगृह्यं चर्चायामितिना पदेषु ॥ १८ ॥

प्रगृह्यसंज्ञकं यत्पदं तच्चर्चायां परभूतायामितिना आगमिकेन व्यवधीयते । चर्चाशब्देन इतिकरणात्परतो या तस्यैव पदस्य द्विरुक्तिः सोच्यते । पदेष्वित्यधिकारार्थं वचनम् । इतः प्रभृति पदाधिकारो वर्त्तते । यथा (१७अ० ८४क०) द्वेऽइति द्वे । ग्रीवेऽइति ग्रीवे । (४अ० २२क०) असेऽइत्यसे । त्वेऽइति त्वे ॥

## रिफितं च संहितायामनिरुक्तम् ॥ १९ ॥

रिफितं चशब्दादितिना आगमिकेन व्यवधीयते चर्चायां परभूतायां संहितायामनिर्ज्ञातरेफं यत् । यथा (४अ० १५क०) पुनरिति पुन + । (३अ० २६क०) स्वरिति स्व ÷ । संहितायामनिरुक्तमिति किम् । (४अ० १५क०) पुन ÷ । मन ÷ ॥

## पदावृत्तौ चान्तरेण ॥ २० ॥

पदस्यावृत्तिर्द्विरुक्तिः तस्यां पदावृत्तौ सत्यां अन्तरेण इति भवति सा च नोक्ता अतस्तत्प्रतिपादनार्थमाह ॥

## क्रमोक्तावृत्तिः पदेषु ॥ २१ ॥

क्रमशास्त्रे या पदावृत्तिरुक्ता सा पदेष्वपि भवति । क्रमशास्त्रातिदेशोऽयम् । तत्र चैतदुक्तमस्ति । "स्थितोपस्थितमवग्रह्यस्यान्तःपददीर्घीभावे" "विनामे" "प्रगृह्ये" "रिफिते

निरुक्ते"। अवग्रहे यथा (१अ० १क०) प्र॒जाव॑ती॒रि॒ति॑ प्र॒जा। व॑तीः। अन्तःपदे दीर्घीभावे यथा (१७अ० ५१क०) स॒म॒ह्णा॒नः) स॒म॒ह्णा॒नऽइति॑ समह्णानः) । विनामे च भवति । यथा (१८अ० २क०) सु॒षाव॑। सु॒सावेति॑ सु। साव॑। प्रग्रहे यथा (३अ० १३क०) इ॒न्द्रा॒ग्नीऽइती॑न्द्राग्नी । रिफिते निरुक्ते भवति यथा (४अ० १५क०) पुन॒रिति॒ पुन॑ ÷ । प्र॒ाणः) ॥

## सुपदावसानवर्जम् ॥ २२ ॥

क्रमोत्ताहत्तिः पदेष्वित्यु॒क्तम्। तस्यायमपवादः । सुपदाव॒सा॒ने वर्जयित्वाऽन्यत्र क्रमोत्ताहत्तिर्भवति । तत्र "सुपदे शाकटायनः" इति शाकटायनमतेनाहत्तिः । सा च कतमानां भवति । अवसाने तु सर्वशाखिनामाहत्तिर्भवति । तदुभयं निषिध्यते ॥

## अनितावन्तर्विकारागमं प्रागुक्त्वा ॥ २३ ॥

"अनिताविध्यायः" इत्यत आरभ्य यावदध्यायपरिसमाप्तिरस्मिन्नन्तराले यस्य पदस्य अन्तरा विकार आगमो वा विहितस्तदन्तर्विकारागमं पदं पूर्वमुक्त्वा पश्चात्पदावृत्तिः कर्त्तव्या। स्थितोपस्थितं कर्त्तव्यमित्यर्थः । तत्र चोपचरितषत्वणादि विकारजातमुक्त्वा। यथा (१अ० २६क०) श्रेय॑स्क॒र। श्रेय॑÷ क॒रेति॒ श्रेय॑ ÷ । कर। (१८अ० २क०) सुषाव॑। सु॒सावेति॑ सु। साव॑। (८अ० ४८क०) प॒र॒मे॒ष्ठी। प॒र॒मे॒स्थीति॑ प॒र॒मे। स्थी। (७अ० ३८क०) वृ॒ष्टि॒मा॑ २॥ऽ इ॑व। वृ॒ष्टि॒मा॒नि॒वेति॑ वृष्टिमान्। इ॑व ; अनितावन्तर्विकारागममिति किम्। अस्यावधेरधस्तादुपरिष्टाच्च प्राग्वचनं मा भूत्। यथाऽवधेरधस्ताद्भवति। "विसर्जनीयः"। "चक्षुर्योः शम्"। दु॒या॒व्नऽइति॑ दुः। या॒व्नः)। "तथयोः सम्"। तवं॒स्त॒र॒मिति॒ तव॑÷ । त॒र॒म्। एवमादि।

अथोपरिष्टादवधेर्दर्शयिष्यामः। "अनुस्वारं॰ रोपस्तु मकारः"। सठं॰ मुनिमि सम्। सम्। "नुधान्तः पदेऽरेफे"। प्रप्रिवाऽएमुऽइति पप्रि। वाऽएसं+। संस्तुतिः(:। अस्यावधेर्बहिर्यथा संहितायां पदे भवतीत्यर्थः॥

## विश्पतीवेति च॥ २४॥

विश्पतीवेत्येतत्र पदं प्रागुक्ता पश्चात्पदावृत्तिः कर्त्तव्या। वेष्टक इत्यर्थः। यथा (३३अ॰ ४०क॰) आ विश्पतीव। विश्पती'ऽइवेति विश्पती'। इव। एतत्पदमस्यावधेर्बहिरन्तः प्रागुक्तिरुच्यते॥

## स्वरश्छकारे चकारेण सर्वत्र॥ २५॥

स्वरो व्यवधीयते छकारे प्रत्यये परभूते चकारेणागामिकेन सर्वत्र संहितायां पदे च। यथा (१६अ॰ ४क॰) अच्छा वदामसि। (३५अ॰ १७क॰) यच्छा नः शर्म सप्रथाः(:। पदेषूदाहरणं यथा (१५अ॰ ५क॰) प्राच्छन्द'+। प्रच्छन्द'+। (१७अ॰ ४६क॰) वर्म णाच्छादयामि। संहितोदाहरणम् (१५अ॰ ४क॰) ककुप्छन्द'+। पदाधिकारात्पदेष्वेव चकारेण व्यवधानं माभूदिति सर्वत्र ग्रहणात्संहितापदक्रमेष्वपि भवति॥

## यस्यातिहायसहेति न॥ २६॥

यस्य अतिहाय सह इत्येतैः पदैरुपहितः स्वरः छकारे प्रत्यये न चकारेण व्यवधीयते। यस्य यथा (२५अ॰ १३क॰) यस्य छाया। अतिहाय यथा (२५अ॰ ११क॰) प्रतिहाय छिद्रा गात्राणि। सह यथा (३४अ॰ ४८क॰) सह स्तोमाः(: सह छन्दसः(:॥

विश्वाऽजयान्तं परिदिषस्त्वं त्वां यद्यो

विराजत्यनिराऽअवीवृधन् परिष्ठाः सुक्षितयऽआ-
शाऽओषधीराभाह्यमीवा हि मायास्तेऽसीतेषु
॥ २७ ॥

विश्वा इत्येतत्पदं अथान्तं भवति परिद्विषादिषु प्रत्ययेषु । परिद्विषशब्दे यथा (४अ० २८क०) येन विश्वाः परिद्विषं + । त्वं यथा (६अ० २४क०) विश्वास्त्वम् जाऽउ पावरो ह। त्वां यथा (६प० २४क०) विश्वास्त्वाम् जाऽउ पावरोहन्तु। यदजयो यथा (१८अ० ६८क०) विश्वा यदजयस्पृध + । विराजति यथा (२०अ० ७७क०) धियो विश्वा विराजति। अनिरा यथा (११अ० ४४क०) व्यस्यन्विश्वाऽअनिरा(:। अवीवृधन्यथा (१२अ० ४८क०) इन्द्रं विश्वाऽअवीवृधन्। परिष्ठा यथा (१२अ० ७५क०) अति विश्वाः परिष्ठाः। सुक्षितयो यथा (१२अ० १०७क०) विश्वाः सुक्षितयः पृथक्। आशा यथा (२७अ० ७क०) विश्वाऽआशाः प्रमुञ्चन्। ओषधीर्यथा (१८अ० ६६क०) पृष्ठो विश्वाऽओषधी-राविवेश। आभाहि यथा (२७अ० १क०) विश्वाऽआभाहि प्र दिशश्चतस्रः। अमीवा यथा विश्वाऽअमीवाः। हिमाया यथा विश्वा हि मायाः। ते यथा (३३प० ६१क०) विश्वास्ते स्पृध + अथयन्त। असि यथा (३३प० ६०क०) अभि विश्वा-ऽअसि स्पृध +। ननु "स्वरसंस्कारयोश्छन्दसि नियमः" इति स्वरसंस्कारावधिकृतौ वेदितव्यौ न चायं स्वरो न संस्कारः। अत्र हि इदमूषान्तं पदमिदं स्वरान्तं पदमित्येतदुच्यते। अप्रस्तुताभिधानमेतत्। उच्यते पदानां सन्दिह्यमानानां निश्चयो नैव दोषायेति तावत्पश्यामः। अतः साधुपदनिश्चय-लक्षणमिति। अनभिज्ञस्य बोधनार्थम् ॥

पृथिव्या स्वरान्तर्ट० सम्भवः शुक्रो मन्थी पृथिवीं. परो देवेभिरित्येतेषु ॥ २८ ॥

पृथिव्या इत्येतत्पदं स्वरान्तं भवति सम्भवादिषु पदेषु परेषु। सम्भव यथा (४अ० १३क०) पृथिवी मा विगत पृथिव्या सम्भव। शुक्रो यथा (७अ० १२क०) सञ्जग्मानो दिवा पृथिव्या शुक्रः। मन्थी यथा (सञ्जग्मानो दिवा पृथिव्या मन्थी। पृथिवीं यथा (१५अ० ६क०) पृथिव्या पृथिवीम्। परो देवेभिर्यथा (१७अ० २६क) पृथिव्या परो देवेभि०। स्वरान्तमिति किम्। (११अ० ७१क०) नाभा पृथिव्याऽ समिधाने॥

च विश्वा वो ब्रह्म विश्वा हरी युक्तास्ते शफानां जजान नु कमित्येतेष्विमा ॥ २९ ॥

च विश्वादिषु प्रत्ययेषु परेषु इमा इत्येतत्पदं स्वरान्तं भवति। च विश्वा यथा (८अ० २३क०) इमा च विश्वा भुवनानि। वो यथा (१९अ० ५३क०) इमा वो हव्या चकृमा जुषध्वम्। ब्रह्म यथा (१४अ० २क०) इमा ब्रह्म पीपिहि सौभगाय। विश्वा यथा (१७अ० १६क०) यऽइमा विश्वा भुवनानि जुहत्। हरी यथा (३३अ० ६८क०) इमा हरी वहतस्तानोऽअच्छ। युक्ता यथा (३४अ० १८क०) सवना कृतेमा युक्ता ग्रावाण:। ते यथा (२९अ० १६क०) इमा ते वाजिन्नव मार्जनानि। शफा यथा (२९अ० १६क०) इमा शफानाए सनितुः। जजान यथा (१७अ० २८क०) न तंविदाथ यऽइमा जजान। नु कं यथा (२५अ० ४४क०) इमा नु कं भुवना सीषधाम॥

हवेमोतेमा च ॥ ३० ॥

हवेमा उतेमा एते च द्वे पदे यथास्यहीतमेव स्वरान्ते भवतः। हवेमा यथा (२१ष० ८क०) ऋृतस्य मित्रावरुणा हवेमा। उतेमा यथा (१७ष० २०क०) विश्वकर्मा वृतेमा॥

विष्णो ते बभूव नासत्या भिषजा नऽआवोढं या देवा हविषो नो मृडातो नोऽअच्छ विमुञ्चेत्येतेषु ता॥ ३१॥

विष्णो इत्यादिषु प्रत्ययेषु परेषु ता इत्येतत्पदं स्वरान्तं भवति। विष्णो यथा (२ष० ६क०) ता विष्णो पाहि। ते यथा (२५ष० ४०क०) सर्वा ता ते ब्रह्मणा सूदयामि। बभूव यथा (१०ष० २०क०) परि ता बभूव। नासत्या यथा (२०ष० ७४क०) ता नासत्या सुपेशसा। भिषजा यथा (२०ष० ७५क०) ता भिषजा सुकर्मणा। नऽआवोढं यथा (२०ष० ८३क०) ता नऽआवोढमश्विना। या देवा यथा (२१ष० ५७क०) इति ता या देवा देवदानानि। हविषो यथा (२५ष० ३८क०) सुचेव ता हविषोऽअध्वरेषु। नो मृडातो यथा (३३ष० ५५क०) ता नो मृडा तऽईदृशे। अच्छ यथा (३३ष० ६८क०) इमा हरी वहतस्ता नोऽअच्छ। विमुञ्च यथा (२७ष० २२क०) नियुद्भिर्वायविह ता विमुञ्च॥

ता ता च॥ ३२॥

एतौ च ता ता शब्दौ पदावयवभूतौ स्वरान्तौ भवतः। यथा (२५ष० ४२क०) ता ता पिण्डानां प्रजुहोम्यग्नौ॥

धिष्ण्या वरिवो विदं धिष्ण्या युवमिति च॥ ३३॥

एतौ च यथास्यहीतौ धिष्ण्याशब्दौ स्वरान्तौ भवतः।

यथा (२०अ० ७३क०) धिष्ण्या॑ वरि॒वो वि॑दत्। यथा (२५अ० १५क०) तद॑श्विना शृणुतं धिष्ण्या युवम्। इतिशब्दः पदाधिकारप्रकरणसमाप्तिज्ञापनार्थः॥

## भाव्युपधश्चरिहिसर्जनीयः॥ ३४॥

भावी उपधाभूतौ यस्य स भाव्युपधः कोऽसौ विसर्जनीयः। रिहिसर्जनीयश्च "विसर्जनीयो रिफित" इत्यत आरभ्य यः परिभाषितः एतौ विसर्जनीयावधिकृतौ वेदितव्यौ। अधिकारसूत्रमेतत्॥

## रेफे लुप्यते दीर्घश्चोपधा॥ ३५॥

रेफे प्रत्यये लुप्यते विसर्जनीय उभयरूपोऽपि भाव्युपधो रिहिसर्जनीयश्च उपधाभूतश्च स्वरो दीर्घमापद्यते। भाव्युपधो भवति यथा (२४अ० ३८क०) रुद्रः रौद्रः। रु॒द्रो रौ॒द्रः॒ कार्यं॑। (७अ० १६क०) मतिभिः रिहन्ति। म॒तिभी॑ रिहन्ति। रिहिसर्जनीयो भवति। यथा प्रातः रात्रिः। प्रातारात्रिः। पुनः रक्षाम्। पुनारक्षाम्। रूपोदाहरणमेतत्। उपरितनसूत्रे प्रयोजनं भविष्यति। भावीत्यादि किम्। (१६अ० ५०क०) परि॑ णो रु॒द्रस्य॑॥

## रेफं स्वरघौ॥ ३६॥

रेफमापद्यते उभयरूपो विसर्जनीयः स्वरेषु परभूतेषु घिसंज्ञकेषु च परभूतेषु। स्वरे भवति यथा (८अ० २१क०) अग्निः एकाचरेण। अ॒ग्निरेका॑चरेण। (३४अ० ३४क०) प्रातः अग्निम्। प्रा॒तर॒ग्निम्। प्रातः इन्द्रम्। प्रा॒तरिन्द्र॑म्। घिसंज्ञकेषु भवति यथा (३अ० १५क०) विश्वचः जनेषु। वि॒श्वच॑र्षणी॑षु। (८अ० ६क०) सवितः वामम्। प्राससुय सवितर्वामम्। भावीत्यादि किम्। दिवो मूर्धा।

## कण्ठ्यपूर्वो यकारमरिफितः ॥ ३७ ॥

अवर्णः कण्ठ्यः अवर्णपूर्वो विसर्जनीयो अरिफितो यकारमापद्यते। स्वरेषु यथा (२४अ० ३८क०) श्विवः आदित्यानाम्। श्विवयादित्यानामित्येवं स्थिते यवयोः पदान्तयोरित्यादिना यकारलोपः। ततः श्विवऽआदित्यानामिति रूपं सिध्यति। (१७अ० ८२क०) इन्द्रः एकम्। इन्द्रऽएकठ्ं सूर्यम्। (१२अ० ७५क०) याः ओषधीः। याऽओषधीः पूर्वा। (१२अ० ८९क०) याः अफलाः। याऽअफलाऽअपुष्पाः॥

## लोपश्वौ ॥ ३८ ॥

अरिफितः कण्ठ्यपूर्वो विसर्जनीयो लोपमापद्यते धिसंज्ञकेषु प्रत्ययेषु। यथा (१अ० १क०) अयक्ष्माः मा। अयुक्ष्मा मा। (१अ० २४क०) अततेजाः वायुः। अततेजा वायुरसि। अरिफित इति किम्। (१अ० २क०) मा ह्वार्मा ते यज्ञपतिः॥

## भूमेश्चाकारेऽपृक्ते ॥ ३८ ॥

भूमिशब्दसम्बन्धी विसर्जनीयो लुप्यते। आकारेऽपृक्तसंज्ञके परे। यथा (२६अ० १६क०) भूमिः आददे। दिवि भूम्याददे। आकारेऽपृक्ते इति किम्। (२३अ० १०क०) भूमिरा वपनम् इत्॥

## यकाराकारयोर्जास्यत्ये पदे ॥ ४० ॥

जास्यत्ये पदे यकारस्य च लोपो भवति। जायास्त्यमिति प्राप्ते यकाराकारयोर्लोपे कृते जास्त्यमिति रूपं

भवति। यथा (३३अ० १२कं०) सज्ञ्ास्त्यठं० सुयम्मा
ह्रंणुष्व ॥

## अंलोपो माँस्पचन्याः ॥ ४१ ॥

अकारलोपो मांसपचनीशब्दे द्रष्टव्यः। मांसपचनी इति प्राप्ते यथा (२५अ० २६क०) यन्नीक्षणं मांस्पचन्याः ॥

## सर्वो अकार ओकारम् ॥ ४२ ॥

सर्वः अकारः ओकारमापद्यते। सर्वग्रहणात्लोपधो विसर्जनीयो धिसंज्ञकेषु प्रत्ययेषु। यथा (१अ० १क०) अघशंठ०सः भ्रुवाः। (१अ० २क०) मातरिश्वनः घर्मः। मातरिश्वनो घर्मः। अरिफित इति किम्। (४अ० १५क०) पुनर्मन ॥

## अकारे च ॥ ४३ ॥

अकारे च प्रत्यये सर्वो अकार ओकारमापद्यते। यथा (२अ० २१क०) वेदः असि। वेदोऽसि। (१अ० १२क०) अग्रे गुवोऽग्रे पुवः। अरिफित इति किम्। (१२अ० ८क०) पुनरूर्ज्जा। (४अ० १५क०) पुनरायुः ॥

## एषो ह च ॥ ४४ ॥

एष इत्ययं विसर्जनीय ओकारमापद्यते ह इत्येतस्मिन् पदे प्रत्यये। अवग्रमत्र "एष च" इत्यनेन एषशब्दस्य व्यञ्जनमात्रे विसर्जनीयलोपो विहितः तेनात्र ओकारो निपात्यते। यथा (३२अ० ३क०) एषो ह देवः ॥

## स्वो रुहावहश्च रात्र्याम् ॥ ४५ ॥

स्वरित्ययं विसर्जनीयो रुहौ प्रत्यये ओकारमापद्यते। अहरित्ययं च रात्रिप्रत्यये। यथा। (११अ० २२क०) स्वः रुहाणाः। स्वो रुहाणाऽअधिनाकम् स्वः रोहाव। जाय-

ऽएहि स्त्रो रोहाव (३१अ० २२क०) अत्र: रावे । श्रीर्थ ते लक्ष्मीश्च पत्न्या'यहोरात्रे । (१८अ० २३क०) अ_ह्नो रात्रे-ऽज्'वंह्नोवे । (२७अ० ४५क०) अ_ह्नो रात्रास्तो' कल्यंन्ताम् ॥

## स्वरे भाव्यन्तस्थाम् ॥ ४६ ॥

स्वरेऽसवर्णे प्रत्यये भावी अन्तस्थामापद्यते । यथा (३अ० ५८क०) त्रि अम्बकम् । त्र्यम्बकं यजामहे । (११अ० ४४क०) वाजी अर्वन् । अ_ग्रभं'ऽव वाज्यर्वन् । (११अ० ७०क०) द्रु अन्नः । द्रुं'व_ः स_र्पिरासुतिः । (११अ० ४४क०) वीडु अङ्गः । स्थिरो भव वी_ड्वङ्गः ॥

## सन्ध्यक्षरमयवायावम् ॥ ४७ ॥

ए ओ ऐ औ एतानि च यथाक्रमं स्वरे प्रत्यये अय् अव् आय् आव् इत्येवमापद्यते । यथा (३अ० २७क०) इडे आ इहि । इड_ऽएहि । (४अ० २७क०) क्षृशानो एते । क्षृशान-वे_ते । (२५अ० १क०) सरस्वत्ये अग्रजिह्वम् । सरस्वत्याऽअग्र-जिह्वम् । (१०अ० १६क०) हिरण्यरूपौ उषसः । हिरण्यरूपा-उ_षसं । अत्र च "यवयो: पदान्तयो:" इत्यादिना यकार-वकारलोपः । "न वकारस्यासस्थानऽएकेषामिति" न वकारस्य लोपः ।

## उदात्तस्यान्तस्थीभावे स्वरितं परमनुदात्तम् ॥ ४८ ॥

उदात्तस्य स्वरस्यान्तस्थापत्तौ सत्यां परं यदनुदात्तमक्षरं तत् स्वरितं भवति । (३अ० ५८क०) त्रि अम्बकम् । त्र्यम्बकम् । (३३अ० ८८क०) देवी एतु । दे_व्येतु सूनृता । (११अ० ७०क०) द्रु अन्नः । द्रुं'न्नः । (३अ० ५२क०) नु इन्द्र । योजान्विन्द्र ।

ननु "युवर्णौ यवौ चेप्र" इत्यत्र स्वरितो विहितः पुनः किमर्थमिदमुच्यते "स्वरितं पदं परमनुदात्तमिति" द्वयोः स्वरयोः सन्धावयं स्वरितो निगद्यते तत्र न ज्ञायते किं पूर्वस्य स्वरस्य स्थाने स्वरित उत उत्तरस्य तत्र यत्परमक्षरं अनुदात्तं तत् स्वरितं भवतीति सूत्रारम्भार्थः ॥

## कण्ठ्य ऋकारे ऋस्वम् ॥ ४९ ॥

कण्ठ्यः स्वरः ऋकारे प्रत्यये ऋस्वस्वरमापद्यते। यथा (१३अ० ५८क०) विश्वकर्मा ऋषिः। विश्वकर्म्मऽर्षिः। (२१अ० ४०क०) स्वाहा ऋषभम्। स्वाहऽर्षभमिन्द्राय। (१५अ० ४९क०) येन ऋषयः। येनऽर्षयस्तपसा। (१८अ० ५२क०) यत्र ऋषयः। यत्रऽर्षयो जग्मुः। ऋस्वस्य स्थाने ऋस्वो विधीयमानोऽन्यस्याः संहिताया निवृत्तिं करोति विवृत्तिसंहितैवात्र भवति न स्वरसंहिता॥

## अथैकमुत्तरस्य ॥ ५० ॥

अथानन्तरमुत्तरो वर्णः चशब्दात् पूर्वश्च एकं वर्णं विकारभूतमापद्यते, इत्येतदधिकृतं वेदितव्यम्॥

## सिमः सवर्णे दीर्घम् ॥ ५१ ॥

"सिमादितोऽष्टौ स्वराणाम्" इत्युक्तम्। सिमसंज्ञकः स्वरः सवर्णे स्वरे प्रत्यये परे पूर्वं उत्तरश्च एकं वर्णं दीर्घमापद्यते। यथा (१अ० १क०) प्र अर्पयतु। प्रार्पयतु। (२६अ० २३क०) तव अयम्। तवायम्। (२०अ० ८१क०) नासत्या अश्वावत्। नासत्याश्वावत्। (२०अ० ७८क०) शुचि इव। शुचीव घृतम्। (१२अ० ६क०) हि इम्। वि हीमिद्ः। (२अ० १५क०) अनु उत्। अनूत्पम्॥

## अनुनासिकवत्यनुनासिकम् ॥ ५२ ॥

अनुनासिकवत्येकीभावे पूर्वश्च परश्च एकमनुनासिकमापद्यते । यथा (१५प० १८क०) उप घर्तं॰ गः । उ॒पा॒घ्र॒गः॑ऽ । (१७अ० ८८क०) उप घर्तं॰ गुना । उ॒पा॒घ्र॒ गु॒ना॒ समंमृतत्वम् । "अनुनासिका चोपधा" इत्यादिना एकस्मिन् पदे उपधाऽनुनासिक्यं एकस्मिन् पदे अनुस्वारो विहितः । तत्र यस्मिन् पदे उपधाऽनुनासिक्यं तमधिकृत्योच्यते । एतदनुनासिकवत्यनुनासिकमिति ॥

## कण्ठ्यादिवर्णे एकारम् ॥ ५३ ॥

कण्ठ्यात्पर इवर्णः पूर्वस्वरस्य परस्य कण्ठ्य एकमेकारं वर्णमापद्यते । यथा (१८अ० ४८क०) वरुण इह । वरु॒णे॒ह बो॑धि । (४अ० १क०) या इदम् । एदमंगन्म ॥

## उवर्णे ओकारम् ॥ ५४ ॥

कण्ठ्यादुत्तरे उवर्णे कण्ठ्य उवर्णश्चैकमोकारमापद्यते । यथा (१अ० १क०) त्वा ऊर्जे । त्वोर्जे । (२अ० ३क०) त्वा उत्तरतः । मि॒त्रावरु॑णौ त्वोत्त॒र॒तःऽ ॥

## समुद्रस्येमँस्त्वे मँस्त्वोझन्निति च ॥५५॥

"सन्ध्यक्षर ऐकारौकारौ" इति वक्ष्यति तस्य पुरस्तादपवादभूत उत्तरसन्ध्यक्षरस्वरूप एकादेशो निपात्यते । यथा (१३अ० १७क०) समुद्रस्य एमन् । स॒मु॒द्रस्येमन् । (१३अ० ५३क०) त्वा एमन् । अ॒पान्त्वेमन् (१३अ० ५३क०) त्वा ओझन् । अ॒पान्त्वोझन् ॥

## एजत्योजोरेकेषाम् ॥ ५६ ॥

अवर्णात् पूर्वस्मादेजत्योजो:प्रत्यययोरेकेषामाचार्याणामभ-

तेन उत्तरसवर्णे आदेशो भवति। यथा (४०म० ६कं०) न एजति। नेजति। ओजः यथा (३६अ० १कं०) सह ओजः। वागोजः सहोजः। एकेषामिति किम्। तदेजति तन्नैजति। वागोजः सहोजः॥

## सन्ध्यक्षर ऐकारौकारौ॥ ५७॥

अवर्णः सन्ध्यक्षरे प्रत्यये पूर्वं उत्तरश्च एकमक्षरमापद्यते। ऐकारम्। औकारश्च। अत्र चत्वारि सन्ध्यक्षराणि द्वावेतौ विकारौ ऐकारौकारौ तत्र यथासम्भवात् "विकारौ यथासन्नम्" इति एकारे ऐकारे च प्रत्यये ऐकारो भवति। ओकारे औकारे च प्रत्यये औकारो भवति। एकारे भवति यथा (२२अ० ३४कं०) स्वाहा एकताय। स्वाहैकताय। ऐकारे भवति यथा (१८अ० १८कं०) इन्द्राय ऐन्द्रम्। इन्द्रायैन्द्रम्। ओकारे भवति यथा (८अ० ३९कं०) इन्द्र ओजिष्ठ। इन्द्रौजिष्ठ। औकारे भवति यथा (३१अ० ८कं०) प्र औचन्। प्रौचन्॥

## वाहौ च स्वरभूते॥ ५८॥

वाहौ च प्रत्यये स्वरभूतं पूर्वः कण्ठ्य उत्तरश्च वाहेः सम्बन्धी उवर्ण एकमौकारमापद्यते। यथा (१८अ० २६कं०) तुर्य्यं वाहौ। तुर्य्यौहौ। (१८अ० २७कं०) पष्ठ वाहौ। पष्ठौहौ। स्वरभूत इति किम्। (१८अ० २७कं०) पष्टवाट् च मे। "उवर्णं ओकारम्" इत्यस्यायमपवादः॥

## आरमृकारोऽपृक्तात्॥ ५९॥

अपृक्तात्पदात्पर ऋकार आरमापद्यते सहापृक्तेन। यथा (३०अ० ८कं०) आ ऋत्यै। आर्त्यै परिविक्तम्। अत्र स्वरो रेफस्वकारमारोहति॥

## लृकारश्चाल्कारम् ॥ ६० ॥

इदं सूत्रं केचिन्न पठन्ति व्यर्थत्वात् । लृकारश्चाल्कारमापद्यते । या लृकारः । याल्कारः ॥

## एदोद्भ्यां पूर्वमकारः ॥ ६१ ॥

एकारौकाराभ्यां परं अकारः पूर्वरूपमापद्यते । यथा (१८अ० ५७क०) ते अवन्तु । तेऽवन्त्वस्मान् । (२४अ० ३७क०) ते अप्सरसाम् । तेऽप्सरसाम् । (२अ० २१क०) वेदः असि । वेदोऽसि । (२अ० २क०) स्तुपः असि । स्तुपोऽसि । "सर्वो अकार ओकारम्" । "अकारे च" इत्यनेन च ओकारः ॥

## तौ चेदुदात्तावनुदात्ते स्वरितौ ॥ ६२ ॥

तौ यदि एकारौकारौ उदात्तौ भवतः तदाऽनुदात्ते अकारे परे स्वरितौ भवतः । यथा वेदो असि । वेदोऽसि । स्तुपो असि । स्तुपोऽसि । ते अप्सरसाम् । तेऽप्सरसाम् । "एदोद्भ्यामकारो लुगभिनिहितः" इति स्वरितत्वं विहितमेव । इह त्वपवादार्थं तदुच्यते ॥

## न देशे भवति ॥ ६३ ॥

देशे इत्ययमकारः अभवदित्येतस्मिन् प्रत्यये न स्वरितो भवति । यथा (३४अ० ११क०) देशे अभवत् । सो देशेऽभवत्स्वरित ॥

गाहमानः शिवो भरन्तो द्वेषोभ्यो जम्भयन्तो वाजे वाजजितो मदन्तः शोचेऽवसे सुषुवे ज्योते सुपर्णो वीरुधः सुवीरो धातवे सूनवे द्रुघानऽआशवो वहतः सङ्क्रन्दनो वाहवोऽयुध्योऽद्रुहः ॥६४॥

एतेभ्य एकारौकारेभ्यः परोऽकारोऽभिनिधीयते। अभिनिधानं च पूर्वरूपता। गाहमानो यथा (१७म० ३८क०) गाहमानोऽद्रयः। ग्रिवौ यथा (३म० ६१क०) वर्हिष्ठं० सप्तः ग्रिवोऽतौ हि। भरन्तो यथा (११म० ७५क०) भरन्तोऽश्वायेव तिष्ठते। द्वेपोभ्यो यथा (५म० ३५क०) द्वेपोभ्योऽन्यकृतेभ्यः। जम्भयन्तो यथा (८म० १६क०) जम्भयन्तोऽहिम्। वाजे यथा (८म० १८क०) वाजेवाजेऽवत। वाजजितो यथा (८म० १३क०) वाजजितोऽध्वनः। मदन्तो यथा (११म० ७५क०) मदन्तोऽग्ने मा तं। शोचे यथा (१२म० २६क०) भद्रशोचेऽपूपम्। अवसे यथा (८म० २६क०) अवसेऽग्निमन्वारभामहे। सुषुवे यथा (८म० २३क०) सुषुवेऽयेसोमम्। ज्योते यथा (८म० ४३क०) ज्योतेऽदिति सरस्वति। सुपर्णो यथा (१२म० ४क०) सुपर्णोऽसि गरुत्मान्। वीरुधो यथा (१२म० ८४क०) वीरुधोऽस्यैसन्दत्त। सुवीरो यथा (४म० ३७क०) सुवीरोऽवीरहा। धातवे यथा (३८म० ५क०) सरस्वति तमिह धातवेऽकः। सूनवे यथा (३म० २५क०) सूनवेऽग्ने सूपायनो भव। दूणानो यथा (१३म० ८क०) दूणानोऽस्तासि। आग्रवो यथा (१५म० ४१क०) आग्रवोऽस्तम्। वहतो यथा (८म० ३५क०) वहतोऽप्रतिधृष्टशवसम्। सङ्क्रन्दनो यथा (१७म० ३३क०) सङ्क्रन्दनोऽनिमिषः। वाहवो यथा (१७म० ४६क०) वाहवोऽनाधृष्या यथाऽसथ। अयुध्यो यथा (१७म० ३८क०) अयुध्योऽस्माकं० सेनाः। भद्रहो यथा (१२म० ५०क०) भद्रहोऽनमीवाऽइयो मह्यः। ननु "एदोद्भ्यां पूर्वमकारः" इत्यनेनैवाभिनिहितः सिद्धः किमर्थं गाहमानादिभ्य उत्तरस्याकारस्याभिधानमुच्यते। नैवाभिनिहितः सिद्धः "प्रकृतिभावश्च" इति प्रकृतिभावस्तु वक्ष्यति तस्यायं पुरस्तादपवादः॥

वोऽहठं० सोऽहठं० सोऽस्माकं तेऽभिगरो वोऽर्वांचो ॥ ६५ ॥

एते द्विपदा यथागृहीतमेवाभिनिधीयन्ते। वोऽहं यथा (८अ० ४क०) तेषु॒ं वि॒र्मि॑प्रियाणां वो॒ऽहम्। सोऽहं यथा (१८अ० ३५क०) सो॒ऽहंवाजम्। सोऽस्माकं यथा (१२अ० १०१क०) उप॑-क्षिरस्तु सो॒ऽस्माकम्। तेऽभिगरो यथा (८अ० ४७क०) पुन॒-र्तु॒ स्तेऽभिगरःऽ। अर्वांचो यथा (८अ० ४क०) आव॒॒ोऽर्वांचो॑ सुम॒तिःऽ॥

ये॒ऽन्नाचयोः ॥ ६६ ॥

ये इत्येतस्मात् परयोः अन्नात्तसम्बन्धी अकारोऽभिनिधी-यते। अन्न यथा (१६अ० ६२क०) ये॒ऽन्नेषु। अत्र यथा (१२अ० ४५क०) येऽत्र॒ स्थ पु॒रा॒णा ये॒ च॒ नूतनाःऽ॥

अविद्याऽसम्भूत्योश्च ॥ ६७ ॥

अविद्या असम्भूतिसम्बन्धी अकारोऽभिनिधीयते। चश-ब्दात् ये इत्येतस्मात् परः। अविद्या यथा (४०अ० १२क०) ये॒ऽविद्यामु॒पासते। असम्भूतिं यथा (४०अ० ९क०) ये॒ऽसंभूति-मु॒पासते। इत्येतयोरिति किम् (१६अ० ८क०) अथो॒ ये॒ऽस्य सत्वानः॥

उपस्थेऽन्तस्तेभ्योऽकरम् ॥ ६८ ॥

एतौ च द्विपदौ यथागृहीतमेवाऽभिनिधीयेते। उप-स्थेऽन्तौ यथा (१२अ० ३८क०) शिवे॑ मा॒तुर्य्यो॒पस्थे॒ऽन्तर॑स्याम्। तेभ्योऽकरं यथा (२६अ० ८क०) भृइन्तेभ्यो॑ऽकर॒मं ÷ ॥

नमोऽस्त्वसौनामभ्याम् ॥ ६९ ॥

नमोऽस्तु एतत् द्विपदं यथागृहीतमेवाभिनिधीयते।

